( वाजपेयविषययूपारोहणाभिधानम् )

समहं प्रजया सं मया प्रजा समहꣳ
त्वम् । रायस्पोषेण सं मया रायस्पोषः—
वस्ता

कल्पः—" अथेमं लोकं प्रत्यवेक्षते समहं प्रजया सं मया प्रजा समहꣳ रायस्पोषेण सं मया रायस्पोष इति " इति ।

संगतोऽस्मि संगम्यतामिति यथायोगमध्याहर्तव्यम् ॥

आशीःपरत्वेन व्याचष्टे—

" समहं प्रजया सं मया प्रजेत्याह । आशिषमेवैतामाशास्ते । " [ ब्रा० का० १ प्र० ३ अ० ७ ] इति ॥

अन्नाय त्वाऽन्नाद्याय त्वा वाजा-
य त्वा वाजजित्यायै त्वा—

कल्पः—" तमेवमासपुटैर्घ्नन्ति अन्नाय त्वेति पुरस्तादध्वर्युः, अन्नाद्याय त्वेति दक्षिणतो ब्रह्मा, वाजाय त्वेति पश्चाद्धोता, वाजजित्यायै त्वेत्युत्तरत उद्गाता " इति ।

ऊषखननपांसव आसास्तानश्वत्थपत्रैः पुटीकृत्य तैरासपुटैर्यूपादवरोहन्तं यजमानं हन्युः ।

अत एवाऽऽपस्तम्ब आह " तमाश्वत्थैरासपुटैरूषपुटैरुभयैर्वा वैश्याः प्रतिदिशमर्पयन्ति महर्त्विजो वा दीर्घवंशेषु प्रबध्य[1] " इति ।

सामान्येन प्राणिभिर्भोज्यमन्नं, राजामात्यादिभिर्भोज्यमन्नाद्यम् । तत्राप्यपूपादिविशेषो वाजः । तस्य सर्वस्यान्नस्य संपादनं वाजजित्या ॥

द्विविधं हननं क्रमेण विधत्ते—

" आसपुटैर्घ्नन्ति । अन्नं वा इयम् । अन्नाद्येनैवैनꣳ समर्धयन्ति । ऊषैर्घ्नन्ति । एते हि साक्षादन्नम् । यदूषाः । साक्षादेवैनमन्नाद्येन समर्धयन्ति । " [ ब्रा० का० १ प्र० ३ अ० ७ ] इति ।

ऊषाणामाधानादिसाधनत्वेन पारलौकिकान्नं प्रति साक्षात्साधनत्वम् ॥

हनने प्रकारविशेषं विधत्ते—

" पुरस्तात्प्रत्यञ्चं घ्नन्ति ( ६ ) । पुरस्ताद्धि प्रतीचीनमन्नमद्यते । " [ ब्रा० का० १ प्र० ३ अ० ७ ] इति ।

हन्यमानस्य पुरस्तादवस्थितो हन्ता प्रत्यञ्चं स्वाभिमुखं हन्यात् । लोकेऽपि हि पुरतोऽवस्थितात्पात्रात्समादाय स्वाभिमुखं तदन्नमद्यते ॥

---

[1] ख. ञ. प्रबन्ध्य ।

एतदापस्तम्बेन स्पष्टीकृतम्—" मुखतोऽभिघ्नन्ति हन्तारं हन्तारमभिपर्यावर्तते " इति ॥

ताड्यमानं प्रदेशं विधत्ते—

"शीर्षतो घ्नन्ति । शीर्षतो ह्यन्नमद्यते ।" [ब्रा०का०१प्र०३ अ०७] इति ॥

चतुर्दिक्षु हननं विधत्ते—

"दिग्भ्यो घ्नन्ति । दिग्भ्य एवास्मा अन्नाद्यमवरुन्धते ।" [ ब्रा० का० १ प्र० ३ अ० ७ ] इति ॥

## अमृतमसि पुष्टिरसि प्रजननमसि—

कल्पः—" अत्रास्मै प्रत्यवरोहत आसन्दीं निदधाति तस्यां बस्ताजिनमास्तृणाति बस्ताजिने शतमानꣳ हिरण्यं दक्षिणं पादꣳ हिरण्य उपावरोहयति अमृतमसीति, पुष्टिरसि प्रजननमसीति सव्यं बस्ताजिने " इति ।

हे हिरण्य त्वं विनाशरहितमसि । नह्यग्नौ प्रक्षिप्तमपि हिरण्यं काष्ठादिवद्विनश्यति । हे बस्ताजिन त्वं पुष्टिरसि संवत्सरे बह्वपत्योत्पादकत्वात् । एतदेवाभिप्रेत्य प्रजननमसीत्युच्यते ॥

हिरण्येऽवरोहं विधातुं प्रस्तौति—

" ईश्वरो वा एष पराङ्प्रदघः । यो यूपꣳ रोहति । " [ ब्रा० का० १ प्र० ३ अ० ७ ] इति ।

यूपमारूढो यजमानः पराङ्भूलोकाद्विमुखः प्रदघः प्रदग्धुं स्वात्मानं विनाशयितुमीश्वरः समर्थो भवति । अथ वा प्रदघः प्रकर्षेण गन्तुमीश्वरो न पुनरावर्तत इत्यर्थः ॥

विधत्ते—

" हिरण्यमध्यवरोहति । अमृतं वै हिरण्यम् । अमृतꣳ सुवर्गो लोकः । अमृत एव सुवर्गे लोके प्रतितिष्ठति । " [ ब्रा० का० १ प्र० ३ अ० ७ ] इति ॥

हिरण्यस्य परिमाणं विधत्ते—

" शतमानं भवति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति " [ ब्रा० का० १ प्र० ३ अ० ७ ] इति ।

मानशब्देन पणस्य विंशो भागोऽभिधीयते । ततः पञ्चपणपरिमितमित्युक्तं भवति । शतसंख्याकाः संवत्सराः पुरुषस्याऽऽयुः । दशानां ज्ञानकर्मेन्द्रि-

यार्णा मध्ये चक्षुरादीन्द्रियस्यैकैकस्य दशसु नाडीषु वृत्तिभेदेन शतेन्द्रियत्वम् ॥

बस्ताजिने वामपादप्रक्षेपं विधातुं प्रस्तौति—

" पुष्ट्यै वा एतद्रूपम् । यदजा । त्रिः संवत्सरस्यान्यान्पशून्परि प्रजायते।" [ ब्रा० का० १ प्र० ३ अ० ७ ] इति ।

संवत्सरे सकृत्प्रसवोपेतानन्यान्गवादिपशून्परित्यज्य संवत्सरे त्रिरपत्यानि प्रसूतेऽतोऽस्याः पुष्टिरूपत्वम् ॥

विधत्ते—

" बस्ताजिनमध्यवरोहति । पुष्ट्यामेव प्रजनने प्रतितिष्ठति (७)।" [ ब्रा० का० १ प्र० ३ अ० ७ ] इति ॥

अत्र विनियोगसंग्रहः—

" क्षत्र तार्प्यं क्षत्र दार्भ्यं परिधत्तोऽत्र दंपती ।
जाये स्वाम्याह्वयेद्भार्या रोहा तं प्रतिवक्ति सा ॥ १ ॥
अहं स्वाम्याह वाजश्च जुहुयाद्द्वादशाऽऽहुतीः ।
आयुर्दशभिरारोहेत्स्वयं बाहू द्रुहः सुवः ॥ २ ॥
सं भुवं प्रेक्षतेऽन्नाय चतुर्भिस्तु महर्त्विजः ।
दिग्भ्यो घ्नन्त्यासपुटकैरमृपुष्टिद्वयात्पदे ॥
स्वर्णबस्तत्वचोर्दद्यात्पञ्चत्रिंशच्चिहोदिताः ॥ ३ ॥ " इति ॥

अथ मीमांसा ।

दशमाध्यायस्य चतुर्थपादे चिन्तितम्—

" तार्प्यमहतवस्त्रस्य बाधकं स्यान्न वाऽग्रिमः ।
गुह्याच्छादनकार्यैक्यादयोग्यत्वात्समुच्चयः ॥ "

महाव्रते श्रूयते—" तार्प्यं यजमानः परिधत्ते दर्भमयं पत्नी " इति । प्रकृतौ " अहतं वासः परिधत्ते " इति घृताक्तं वस्त्रं तार्प्यमित्युच्यते । ताभ्यां तार्प्यदर्भमयाभ्यां दंपत्योरहतं वस्त्रं बाध्यते । कुतः । परिधत्त इत्यनेन प्रकृतिलिङ्गेन गुह्याच्छादनलक्षणस्य कार्यस्यैकत्वावगमात् । मैवम् । तार्प्यदर्भमययोर्गुह्यमाच्छादयितुमयोग्यत्वात् । परिधानं त्वत्रोपरितनं प्रावरणम् । तत्कार्यभेदात्समुच्चयः ।

तृतीयाध्यायस्य प्रथमपादे चिन्तितम्—

" भवेत्सप्तदशारत्निर्वाजपेयस्य यूपकः ।
उन्मानं द्रव्यगं वाजपेयस्याङ्गं पशोरुत ॥

(वाजपेयविषययूपारोहणाभिधानम्)

आनन्तर्यात्प्रकरणात्कर्माङ्गं षोडशिन्यदः ।
ऊर्ध्वपात्रे खादिरेऽग्रे संयुज्यान्वेति कर्मणा ॥
यूपद्वारा पशोरङ्गं पशुद्वारा च कर्मणः ।
सौमिकत्वाद्वाजपेये यूपो नास्ति पशुं विना ॥ ”

वाजपेयप्रकरणे श्रूयते—“ सप्तदशारत्निर्वाजपेयस्य यूपो भवति ” इति । अत्र यूपद्रव्यगतं सप्तदशारत्निशब्दोदितं यदूर्ध्वमानं तद्वाजपेयकर्मणोऽङ्गं, सप्तदशारत्निशब्दवाजपेयशब्दयोरानन्तर्यात् । प्रकरणं चैवमनुगृह्यते । यदि कर्मणः साक्षादूर्ध्वमानं न संभवेत्तर्हि वाजपेयगतं खादिरमूर्ध्वं यत्षोडशिपात्रं तस्मिन्नद उन्मानं संबध्य तद्द्वारा कर्मणाऽन्वेतीति प्राप्ते ब्रूमः—सप्तदशारत्निर्यूप इति सामानाधिकरण्याद्यूपेन साक्षात्संबध्यते । तस्य च यूपस्य पश्वङ्गत्वादुन्मानं यूपद्वारा पशोरङ्गं भवति । तस्यापि पशोर्वाजपेयाङ्गत्वात्पशुद्वारा कर्मणोऽङ्गम् । यद्यपि वाजपेययूपशब्दयोरानन्तर्यमस्ति तथाऽपि वाजपेयस्य सोमयागतया साक्षाद्यूपसंबन्धाभावात्पशुव्यवधानमभ्युपेयम् । वाजपेयस्येति षष्ठ्याः संबन्धमात्रवाचित्वेन व्यवहितसंबन्धमप्यसावभिधत्ते, देवदत्तस्य नप्तेति प्रयोगवत् । यत्सप्तदशारत्निवाजपेयशब्दयोरानन्तर्यं यच्च प्रकरणं तदुभयं न विरुद्धं, पश्वङ्गत्वेऽप्यन्ततो वाजपेयाङ्गत्वाङ्गीकारात् । किं च पूर्वपक्षे यूपशब्देन षोडशिपात्रं लक्षणीयम् । सिद्धान्ते तु नासौ दोषः ॥

तत्रैवाष्टमपादे चिन्तितम्—

“ वाचयेत्स्वामिनं ज्ञाज्ञौ वाचनीयो ज्ञ एव वा ।
अविशेषादुभौ ज्ञस्य स्वामित्वाद्वाचयेदमुम् ॥ ”

वाजपेये श्रूयते—“ क्लृप्तीर्यजमानं वाचयति ” इति । आयुर्यज्ञेन कल्पतामित्यादयो मन्त्राः क्लृप्तयः । तत्र मन्त्रतदर्थाभिज्ञमनभिज्ञं चोभावपि वाचयेत्, विद्वांसं वाचयेदित्येवं विशेषस्याश्रवणात्, अनभिज्ञं तदैव शिक्षयित्वाऽपि वाचयितुं शक्यत्वादिति चेन्मैवम् । अध्ययनविधिबलादधीतवेदस्य विदितवेदार्थस्यैव यजमानत्वात् । तस्मादभिज्ञमेव वाचयेत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

१ क. घ. ङ. च. 'भयमवि'।